भिषजां साधुवृत्तानां भद्रमागमशालिनाम्।
अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम्॥ ७६॥
इति तन्त्रगुणैर्युक्तं तन्त्रदोषविवर्जितम्।
चिकित्सा शास्त्रमखिलं व्याप्याथ परितः स्थितम्॥७७॥
विपुलामलविज्ञानमहामुनिमतानुगम्।
महासागरगम्भीरसंग्रहार्थोपलक्षणम्॥ ७८॥

अष्टाङ्गवैद्यकमहोदधिमन्थनेन
योऽष्टाङ्गसंग्रहमहामृतराशिराप्तः।
तस्मादनल्पफलमल्पसमुद्यमानां
प्रीत्यर्थमेतदुदितं पृथगेव तन्त्रम्॥ ७९॥

इदमागमसिद्धत्वात् प्रत्यक्षफलदर्शनात्।
मन्त्रवत् सम्प्रयोक्तव्यं न मीमांस्यं कथञ्चन॥ ८०॥
दीर्घजीवितमारोग्यं धर्ममर्थं सुखं यशः।
पाठावबोधानुष्ठानैरधिगच्छत्यतो ध्रुवम्॥ ८१॥

एतत् पठन् संग्रहबोधशक्तः स्वभ्यस्तकर्मा भिषगप्रकम्प्यः।
आकम्पयत्यन्यविशालतन्त्रकृताभियोगान् यदि तन्न चित्रम्॥८२

यदि चरकमधीते तद् ध्रुवं सुश्रुतादि-
प्रणिगदितगदानां नाममात्रेऽपि बाह्यः।
अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिह खलु करोतु व्याधितानां वराकः?॥८३॥

अभिनिवेशवशादभियुज्यते सुभणितेऽपि न यो दृढमूढकः।
पठतु यत्नपरः पुरुषायुषं स खलु वैद्यकमाद्यमनिर्विदः॥८४॥
वाते पित्ते श्लेष्मशान्तौ च पथ्यं तैलं सर्पिर्माक्षिकञ्च क्रमेण।
एतद् ब्रह्मा भाषते ब्रह्मजो वा का निर्मन्त्रे वक्तृभेदोक्तिः?॥८५

अभिधातृवशात् किंवा द्रव्यशक्तिर्विशिष्यते।
अतो मत्सरमुत्सृज्य माध्यस्थमवलम्ब्यताम्॥ ८६॥

ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ।
भेडाद्याः किं न पठ्यन्ते तस्माद् ग्राह्यं सुभाषितम् ॥८७॥
हृदयमिव हृदयमेतत् सर्वायुर्वेदवाङ्मयपयोधेः।
दृष्ट्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः ॥ ८८ ॥

इति श्रीसिंहगुप्तसूनुवाग्भटविरचितायामष्टाङ्गहृदय-
संहितायामुत्तरस्थानं समाप्तम्।

# सूचीपत्रम् ।



# मत्स्य पुराणम् ।



महर्षि वेदव्यास प्रणीतम्

तथापि ज्ञाविणा

श्रीजीवानन्द विद्यासागरभट्टाचार्य्येण

संस्कृत्य प्रकाशितम् ।




कलिकाता नगरे ।

सरस्वती यन्त्रे मुद्रितम् ।

१८७६